# श्रीदत्तात्रेयाष्टोत्तरशतनामावलिः।।

**ॐकारतत्त्वरूपाय दिव्यज्ञानात्मने नमः।**
**नभोतीतमहाधाम्न ऐंद्र्यृध्र्या ओजसे नमः ।।१।।**
**नष्टमत्सरगम्यायागम्याचारात्मवर्त्मने।**
**मोचितामेध्यकृतये -ह्रींबीजश्राणितश्रिये ।।२।।**
**मोहादिविभ्रमांताय बहुकायधराय च।**
**भक्तदुर्वैभवच्छेत्रे क्लींबीजवरजापिने ।।३।।**

श्रीः।। अथ अष्टोत्तशतनामभिर्नमस्करोति। *ॐकारतत्त्वेति*। **ॐ**मिति माण्डूक्योक्तं परापरब्रह्मण आलम्बत्वेन प्रतीकत्वेन च कठप्रश्नादिषूक्तं चाभेदं ब्रह्म जानीयात्। तस्य वाचकत्वेऽपि वाच्यवाचकयोर्नामनामिनोरभेदात् ॐकारस्य यत्**तत्त्वं** तुरीयमनन्तमात्रं शुद्धतत्त्वं तदेव **रूपं** यस्य तस्मै **नमः** प्रह्वीभावोऽस्त्विति सर्वत्र संबन्धः(१)। सगुणं व्यावर्तयति - **दिव्य**मौपनिषदं निदिध्यासनसहकृतं तदेवा**त्मा** रूपं यस्य(२)। आकाशं व्यावर्तयति - **नभोऽतीत** महद्धाम यस्य(३)। मायां व्यावर्तयति - *इन्द्रस्य* परमेश्वरस्येय**मैन्द्री** शक्तिभूता सत्त्वासत्त्वाभ्यामनिर्वचनीया माया तस्या **ऋद्धिः** क्रियाकारकफलादिलक्षणा समृद्धिस्तस्या **ओजसे** जडायास्तस्या अस्वतन्त्रत्वात्(४)।।।१।। ईदृशस्य कथं लाभ इत्यत आह - **नष्टः मत्सरः** उपलक्षणात् धीदोषो यस्मात्तस्य **गम्याय**(५)। यतोऽन्यथा**ऽगम्यः आचारः आत्मा** स्वरूपं **वर्त्म** प्राप्त्युपायभूतमार्गश्च यस्य(६)। अन्येषामप्यनुग्राहक इत्याह- **मोचिता अमेध्यकृतयः** पापा भजनरसदानेन येन(७)। **ह्रींबीजो**पासनया **श्राणिता श्रीः** संपद्येन(८)।।२।। तर्हि श्रीदानेन बध्नाति नेत्याह- **मोहादिविभ्रम**नाशाय(९) एकस्यानेकभ्रमनाशसामर्थ्यं कथं तत्राह- **बहुकायधराय** अनेकाचार्यरूपिणे(१०) तादृशस्य भक्तानुग्राहकत्वमाह- **भक्तदुर्वैभवच्छेत्रे** (११)। सर्ववशत्वादीदृक्त्वमाह- **क्लींबीजवरजापिने** (१२)।।३।। संसारकारणहन्त्रे (१३) भजनप्रवर्तकं सगुणरूपमाह- **राजत् शोण**

**भवहेतुविनाशाय राजच्छोणाधराय च।**
**गतिप्रकंपितांडाय चारुव्यायतबाहवे ।।४।।**
**गतगर्वप्रियायास्तु यमादियतचेतसे।**
**वशिताजातवश्याय मुंडिने अनसूयवे ।।५।।**
**वदद्वरेण्यवाग्जालाविस्पृष्टविविधात्मने।**
**तपोधनप्रसन्नायेडापतिस्तुतकीर्तये ।।६।।**
**तेजोमण्यंतरंगायाद्मरसद्मविहापने।**
**आंतरस्थानसंस्थायायैश्वर्यश्रौतगीतये ।।७।।**
**वातादिभययुग्भावहेतवे हेतुहेतवे।**
**जगदात्मात्मभूताय विद्विषत्षट्कघातिने ।।८।।**

आरक्तोऽ**धरोष्ठो** यस्य। उपलक्षणमिदं सर्वाङ्गस्यापि (१४) वामनावतारे **गत्या प्रकम्पितोऽण्डो** येन (१५) **चारू** सुन्दरौ विशेषेण **आयतौ** च **बाहू** यस्य (१६)।।४।। **गतगर्वाः प्रिया** यस्य (१७) **यमादि**भिर्नियमितं चित्तं येन तस्मै तद्रूपाय वा (१८) **वशिता**सिद्ध्या **जातं** सर्वं **वश्यं** यस्य (१९) **मुण्डिने** तद्रूपाय (२०) **असूया**रहिताय (२१) ।।५।। **वदद्वरेण्य**स्य गीष्पत्यादे**र्वाग्जालैरस्पृष्टा विविधा आत्मनो**ऽशावतारा यस्य (२२) **तपोधना**नां तपस्विनां **प्रसन्नाय** (२३) **इडापति**भी राजभिः प्राज्ञैर्वा **स्तुता कीर्ति**र्यस्य (२४) ।।६।। **तेजोमण्यन्तरङ्गाय** सूर्यमण्डलान्तःस्थाय (२५) अत्तीत्य**द्मरः** केवलादी तद्गृहवर्जकः पञ्चसूनादुष्टत्वात् (२६) **आन्तरस्थानं** बुद्धिस्त**त्संस्थाय** (२७) **अयः** शुभावहविधि**रैश्वर्यं** च **श्रौतगीतं** यस्य (२८) ।।७।। '*भीषास्माद्वातः पवते*' इत्यादिनोक्तद्वैतदृग्**भाव**भयकारणाय (२९) **हेतोः** प्रधानादेरपि **हेतु**भूताय (३०) **जगत आत्मा** जीवस्त**दात्मभूतो** बिम्बस्थानीयस्तस्मै (३१) कामादि**षट्क**नाशकाय (३२) ।।८।। देवपक्षीयाय (३३) ऐश्वर्यरूपाय (३४) **असुर**पुरघातिने (३५) **नेत्रे** नायकाय (३६) **नयनाक्षणे** '*श्रोत्रस्य श्रोत्रम्*' इति श्रुतेः (३७) **अचितां** जडानां चितो बुद्धेर्वा

**सुरवर्गोद्धृते भूत्या असुरावासभेदिने।**
**नेत्रे च नयनाक्ष्णेऽचिच्चेतनाय महात्मने ।।९।।**
**देवाधिदेवदेवाय वसुधासुरपालिने।**
**याजिनामग्रगण्याय द्रांबीजजपतुष्टये ।।१०।।**
**वासनावनदावाय धूलियुग्देहमालिने।**
**यतिसंन्यासिगतये दत्तात्रेयेतिसंविदे ।।११।।**
**यजनास्यभुजेऽजाय तारकावासगामिने।**
**महाजवास्पृग्रूपायात्ताकाराय विरूपिणे ।।१२।।**
**नराय धीप्रदीपाय यशस्वियशसे नमः।**
**हारिणे चोज्वलांगायात्रेस्तनूजाय शंभवे ।।१३।।**
**मोचितामरसंघाय धीमतां धीकराय च।**
**बलिष्ठविप्रलभ्याय यागहोमप्रियाय च ।।१४।।**
**भजन्महिमविख्यात्रेऽमरारिमहिमच्छिदे।**

**चेतनाय**। *'चेतनश्चेतनानाम्'* इति श्रुतेः (३८) **महता**माकाशादीना**मात्म**भूताय पूज्याय वा (३९) ।।९।। सर्व**देव**वन्द्याय (४०) विप्रपालकाय (४१) याज्ञिकवन्द्याय (४२) एकाक्षरी**जप**प्रियाय (४३) ।।१०।। **वासना**हराय (४४) अवधूताय (४५) यतनशीलभिक्षु**गतये** (४६) **दत्तात्रेया**ख्याय (४७) ।।११।। यज्ञभोक्त्रे (४८) निर्विकाराय (४९) काशीस्थाय (५०) चित्ताद्य**स्पृ**ष्टाय (५१) गृहीतदेहाय (५२) **वि**विध**रूपायारूपाय** वा (५३) ।।१२।। जीवरूपाय (५४) बुद्धिप्रेरकाय (५५) कीर्तिमत्कीर्तये (५६) मुक्तावलिभूषिताय पापताप**हराय** वा (५७) **उज्ज्वल**गात्राय (५८) **अत्रि**पुत्राय (५९) **शं** सुखं **भ**वत्यस्मात्तस्मै (६०) ।।१३।। देव**मोचकाय** (६१) सर्वबुद्धिप्रकाशकाय (६२) ब्रह्मचर्यादिसाधनगम्याय *'नायमात्मा बलहीनेन लभ्यः'* इति श्रुतेः (६३) श्रौतस्मार्तकर्म**प्रियाय** (६४) ।।१४।। **भज**तां भक्तानां **महिमा**नं **वि**शेषेण

**लाभाय मुंडिपूज्याय यमिने हेममालिने ।।१५।।**

**गतोपाधिव्याधये च हिरण्याहितकांतये।**

**यतीन्द्रचर्यां दधते नरभावौषधाय च ।।१६।।**

**वरिष्ठयोगिपूज्याय तंतुसंतन्वते नमः।**

**स्वात्मगाथासुतीर्थाय मःश्रिये षट्कराय च ।।१७।।**

**तेजोमयोत्तमाङ्गाय नोदनानोद्यकर्मणे।**

**हान्याप्तिमृतिविज्ञात्र ॐकारितसुभक्तये ।।१८।।**

**रुक्शुङ्मनःखेदहृते दर्शनाविषयात्मने।**

**राङ्कवाततवस्त्राय नरतत्त्वप्रकाशिने ।।१९।।**

**द्रावितप्रणताघायाऽत्तःस्वजिष्णुःस्वराशये।**

**ख्या**पयतीति तथा (६५) दैत्योत्कर्षहन्त्रे (६६) तत्त्वज्ञानेन लभ्यत इति तस्मै (६७) यतिवन्द्याय (६८) **यमा**दियोगवते तद्रूपाय वा (६९) **हेम्ना मालते** शोभते इति तथा (७०) ।।१५।। **गता उपाधयो** धर्मचिन्ता **व्याधयो** रोगा विविधा आधयो मानस्यो व्यथा वा यस्मात् (७१) **हिरण्याहिता** दत्ता **कान्ति**र्येन (७२) परमहंसपरिव्राजकचर्यावते (७३) **नर**जन्महन्त्रे तेषामेवार्थित्वात् (७४) ।।१६।। **वरिष्ठयोगिभि**र्वसिष्ठादिभिः **पूज्याय** (७५) भक्तवंशवर्धकाय (७६) तीर्यतेऽनेनेति *तीर्थं* **स्वात्मगाथा**श्रुति**स्तीर्थं** यस्य (७७) **म** इव चन्द्र इव **श्रीः** शोभा यस्य '*मः शिवश्चन्द्रमा वेधाः*' इत्यभिधानात् (७८) **षड्**भुजाय (७९) ।।१७।। **तेजः**प्रचुरं **उत्तमाङ्गं** शीर्षं स्वर्गाख्यं यस्य। '*तस्य वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाः*' इति श्रुतेः। '*द्यां मूर्धानं यस्य विप्रा वदन्ति*' इति स्मृतिश्च (८०) अपूर्वादि*चोदनाचोद्यं* नित्यादि **कर्म** येन (८१) हानिलाभमरणभयानि **वि**शेषेण जानीतीति तथा (८२) **ॐकारितो**ऽङ्गीकृतः शोभन**भक्ति**र्येन (८३) ।।१८।। रोगशोक**मन**स्तापहर्त्रे (८४) **दर्शनाविषयं** स्वरूपं यस्य (८५) विस्तीर्णकृष्णाजिनधराय (८६) जीवयाथात्म्यदर्शकाय (८७) ।।१९।।

**राजत्र्यास्यैकरूपाय मःस्थाय मसुबंधवे।।२०।।**
**यतये चोदनातीतप्रचारप्रभवे नमः।**
**मानरोषविहीनाय शिष्यसंसिद्धिकारिणे ।।२१।।**
**गन्त्रे पादविहीनाय चोदनाचोदितात्मने।**
**यवीयसेऽलर्कदुःखवारिणेऽखण्डितात्मने।।२२।।**
**-ह्रींबीजायार्जुनेष्टाय दर्शनादर्शितात्मने।**
**नतिसंतुष्टचित्ताय यतिने ब्रह्मचारिणे ।।२३।।**
**इत्येष सत्स्तवो वृत्तोऽयात्कं देयात्प्रजापिने।**
**मस्करीशो मनुस्यूतः परब्रह्मपदप्रदः ।।२४।।**

**द्रावितं** पलायितं **प्रणताघं** येन (८८) **आत्तो** गृहीतः **स्वजिष्णोः** स्वात्मजयशीलस्यार्थ**राशि**र्येन *'यस्यानुग्रहमिच्छामि तस्य वित्तं हरामि'* इति प्रसिद्धेः (८९) **राजत्र्यास्यं** मुख्य **रूपं** यस्य (९०) चन्द्रमण्डल**स्था**य (९१) चन्द्र**बन्धवे** (९२) ।।२०।। **यत**नशीलाय तद्रूपाय वा (९३) निस्त्रैगुण्येश्वराय (९४) शान्ताय (९५) **शिष्य**हितेच्छवे (९६) ।।२१।। गमनशीलाय (९७) **पादा**दि**हीनाय**। *'अपाणिपाद'* इति श्रुतेः (९८) कर्मिष्ठाय (९९) उपेन्द्राय (१००) **अलर्क**तारकाय (१०१) **अखण्डै**करसाय (१०२) ।।२२।। मायाहेतवे (१०३) कार्तवीर्यप्रियाय (१०४) शास्त्रगम्याय (१०५) **नत्या तुष्टचित्ताय** (१०६) **यति**रूपाय (१०७) **ब्रह्मचारिणे** च (१०८) ।।२३।। **अया**च्छुभावहविधेः **परब्रह्मप्रदो**ऽयं (मन्त्र)ग्रथित **एष** संन्यासीश्वरस्य भगवतः **स्तवः वृत्तः** स **प्रजापिने कं** सुखं **देयात्**।।२४।।

श्री.प.प.श्रीवासुदेवानन्दसरस्वतीविरचितं मंत्रगर्भश्रीदत्तात्रेयाष्टोत्तरशतनामस्तोत्रं संपूर्णम्।।

।। ॐ तत्सत् ।।